# जैमिनीयसामशाखायाः परिशीलनात्मकः परिचयः

विद्वान् गिरिजाप्रसाद षडङ्गी, सामवेद अध्यापकः
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः.तिरुपति

प्राचीनभारतीयगीर्वाण्याकाशे जैमिन्याख्यं किमपि अत्यद्भुतं विद्योतमानं नक्षत्रम् विराजते। यश्च अनेकविधविद्याकूपात् परमेश्वरोऽयं परमकारुणिकतया मनुष्याणां कल्याणपरम्परां प्रोत्साहयितुं नैकविधान् ग्रन्थान् प्रणीय स्वकीयनाम विमलीचकार।

श्रौतसूत्राणामाम्नाता, मीमांसान्यायस्य प्रणेता भगवान् जैमिनिः भगवतोव्यासस्य कृष्णद्वैपायनस्य परमविधेयः शिष्य आसीत्। एतद्विधौ प्रचरन्ति केचित् श्लोकाः सामवैदिकपरम्परायां, येषामध्ययनेन प्रतीमो यत् कल्पसूत्राणामाम्नाता, पूर्वमीमांसाख्यस्य जैमिनिन्यायस्य च प्रणेता मुनिर्जैमिनिर्भगवतो व्यासादेव सकलं साम सरहस्यं सकल्पञ्च समधीयाय।। तथाहि-

"सामाखिलं सकलवेदगुरोर्मुनीन्द्रात् व्यासादवाप्य भुवि येन सहस्रशाखम्।
व्यस्तं समस्तमपि सुन्दरगीतरागं तं जैमिनिं तलवकारगुरुं नमामि।।"

अथ च-

"वेदोक्तं कर्म येनासीत् मीमांसित्वा सुनिश्चितम्।
व्यासशिष्याय मुनये तस्मै जैमिनये नमः।।"
"उज्जहारागमाम्भोधेर्यो धर्मामृतमञ्जसा।
न्यायैर्निर्मथ्य भगवान् स प्रसीदतु जैमिनिः।।"

एतेन श्लोकत्रयेण सकलानामपि सामविन्मूर्धन्यानां प्रामाण्यपदवीमुपप्रपन्नेन सुनिपुणं विज्ञातं भवति यत् मीमांसान्यायस्य प्रणेता कल्पसूत्राणाञ्चाम्नाता भगवान् जैमिनिर्भगवतो व्यासस्य शिष्य आसीत्।।

**जैमिनिस्तलवकारश्च सामशाखा प्रवर्तकौ-**

जैमिनीयश्रौतविकृतिकल्पवृत्युपक्रमे तत्र वृत्तिकारो मङ्गलमाचरन् एवमुल्लिखति -

"ऋक्सामपाठक्रमकृद् द्रष्टा च ब्राह्मणस्य यः।

तस्मै तलवकाराय नमो यच्छाखिनो वयम्।।इति"

एतेन वृत्तिकारवचनेन भगवतो जैमिनिस्तलवकारस्य च मुनेः कश्चित् सविशेषः सुषमश्च सामशाखासम्बन्धः प्रस्फुरति, येन एकेव कृतिरुभाभ्यामपि नामभ्यां विख्यातिमेति क्षितौ। यथा हि जैमिनिना दृष्टं जैमिनीयं ब्राह्मणं तलवकारनाम्ना ख्यातिमुपेत्य तलवकारब्राह्मणमित्याख्यां भजते। तलवकरप्रणीता तलवकारोपनिषच्च जैमिनी प्रणीतेन जैमिनीयोपनिषदिति नाम्ना ख्यातिं प्रयाति।

कोऽनयोरेकता द्योतकस्तादृशः सम्बन्धो येनैकास्यैव कृतिरुभाभ्यामपि नामभ्यां प्रथते उभयकर्तृतां च भजते। एतद्विषये सामवेदीयगुरुशिष्यपरम्पराविद्भिर्विपश्चिद्भिरेतन्निगद्यते यद् गुरुशिष्ययोरेककृत्या समानसम्बन्धादेकैवकृतिरुभाभ्यामपि नामभ्यां प्रचरति। यथा लोकेऽपि माधवीयमृग्भाष्यं सायणनाम्ना प्रसिद्ध्यति । सायणीयाधातुवृत्तिश्च माधवीयेति प्रख्यायते। कयोरपि गहनः सम्बन्धो नीरक्षीरवदेकतामिव प्रत्यापयति। यतस्तत्कर्तृत्वावगमे विपश्चितामपि विचिकित्सा समुपदेति। तलवकारस्य जैमिनिशिष्यता तु "तं जैमिनिं तलवकारगुरुं नमामि" वाक्यादेव निराबाधं प्रसिद्ध्यति । अथ च जैमिनीयगृह्यसूत्रे सामवेदीयऋषितर्पणप्रकरणे (1.14) मध्ये सामवेदस्य समानः सम्बन्धः कश्चित् प्रवर्तते इति निश्चनुमः। एतस्य च निश्चयस्य पुष्टिं कुर्वाणो विक्रमार्कस्याष्टमशताद्बीतोऽपि पूर्वतनो ग्रन्थः "प्रपञ्चहृदयं" नाम इत्थमवभाषते "तलवकारशाखा प्रयुक्तं सामवैदिकविषयं जैमिनिना प्रदर्शितम्" इति। एतेनेतरयोरेकशाखागतः कश्चित् सविशेषौ दृढतरश्च सम्बन्धः प्रतिभासते। अन्यथा ह्येकैव सामशाखा उभाभ्यामपि मुनिनामभ्यां जैमिनिस्तलवकाराभ्यां संविधिमातन्वन्ती कथं नाम प्रथेत । पूर्वोक्ततथ्यं पुरस्कृत्य जैमिनिस्तलवकारयोः एकशाखात्व प्रत्ययः स्पष्टं प्रतीयते।।

**जैमिनीयशाखापाठपरम्परा-**

वायुपुराणोक्त वर्णनानुसारं पौष्पिञ्जेः चत्वारः शिष्याः आसन् । ते च क्रमेण लौङ्गाक्षि, कुथुमि, कुसीदी, लाङ्गलिश्च। लौङ्गाक्षेः शिष्यपञ्चकमासीत्। ते राणायनि, ताण्ड्य, अनोवेन, सकैतिपुत्र, सात्यमुग्र इति नामभिः लोके विख्यातिं लब्धवन्तः। व्यासात् जैमिनिः सामवेदं अधिजग्राह। जैमिनिः स्वकीयं पुत्रं सुमन्तु अध्यापयामास।

"जैमिने सामगस्याऽसीत् सुमन्तुस्तनयो मुनेः।

सुमन्वां तत्सुतस्ताभ्यामेकैकां प्राह संहिताम्।।"(च.व्यू.सू.भा. पृ.42)

परम्परेऽयं सुमन्तु-सुत्वा-सुकर्मा- क्रमेण प्रचरन्ति आसीत् (जै.गृ)। सुकर्मणैव सहस्रशाखात्मको सामवेदो निर्मितो भवेत्। महिदासविरचितस्य चरणव्यूहभाष्यकारिकायां सुपुत्राय सुमन्वते तथा पौत्राय च एकैकं सामगानं प्रदत्तमिति उल्लेखः स्फुरति। सुकर्मणेऽनेके शिष्येषु द्वौ शिष्यौ पौष्पिञ्जि, हिरण्यनाभाख्यौ अतीवधीमन्तौ आस्ताम् इति अनेकेषु पुराणेषु वर्णितमस्ति। द्वयोः शिष्ययोः प्रत्येकं शाखाशतपञ्चकम् उपदिष्टवान् , इत्थं प्राच्योऽदीच्यभेदेन लोके दृष्टप्रचारः अभवत्।

**जैमिनीयग्रन्थानां सिंहावलोकनम्-**

जैमिनीयतलवकारशाखायोः गानसंहिता, आर्चिकसंहिता, ऊहोषाणी, ब्राह्मणारण्यम्, उपनिषद्ब्राह्मणं, श्रौतसूत्रं, गृह्यसूत्रं चोपलभ्यन्ते। विद्वतल्लजानां महता प्रयत्नेन अनेके ग्रन्थाः प्रकाशपदवीमुपनीताः। किन्त्विदानीमपि बहवो ग्रन्थाः ग्रन्थाक्षरिलिप्यां हस्तप्रतिरूपेण ताळपत्ररुपेण च लभ्यन्ते। एषां प्रकाशनेन जैमिनीयशाखाया आसक्तादराणां महानुभावानां विदुषां महानुपकारः सेत्स्यति इति नैश्चित्येन वक्तुं शक्यते।

**एतच्छाशासम्बन्धिनां प्रकाशितग्रन्थानां विररणमधस्ताद्दीयते-**

1. सन् 1898 खिष्टाब्दे श्रीनिवासाध्वरिकृतजैमिनीयगृह्यसूत्रं सुबोधिनीव्याख्यासहितं मद्रासतः कस्तूरि रङ्गाचार्येण संपादितम्।

2. सन् 1905 खिष्टाब्दे डा. डब्ल्यु. कैलेण्डेन जैमिनीयगृह्यसूत्रं प्रकाशितम्।

3. सन् 1906 खिष्टाब्दे लाईडेनमहोदयः नेदरल्याण्डतः डी गष्ट्रा जैमिनीयश्रौतसूत्रस्य अग्निष्टोमप्रकरणं संपादितवान् ।

4. डा. डब्ल्यु. कैलेण्डेन ब्रेस्लोनगरे सन् 1907 खिष्टाब्दे जैमिनीयसंहितायाः पुस्तकं मुद्रितम्।विस्तृतया भूमिकया पाठभेदसहितं च वर्तते।

5. सन् 1907 खिष्टाब्दे लाहौरे आचार्य रघुवीरशर्मभिः सम्पाद्य प्रकाशिता जैमिनीया सामवेदसंहिता। एषा स्वरचिह्नरहिताऽस्ति।

6. सन् 1912 खिष्टाब्दे लाहौरतः आचार्य रामदेवेन जैमिनीयोपनिषद्ब्राह्मणं संपाद्य प्रकाशितम्।

7. सन् 1916 खिष्टाब्दे लाहौरतः प्रो. रघुवीरशर्माभिः जैमिनीयमहाब्राह्मणं संपाद्य प्रकाशितम्।

8. सन् 1919 खिष्टाब्दे ओसबेहल एक्सृर्डम् महोदयः दासजैमिनीयब्राह्मणं प्रकाशितम्।

9. सन् 1966 खिष्टाब्दे दिल्लीतः जैमिनीयश्रौतसूत्रवृत्तिः संपादितम्।

10. सन् 1967 खिष्टाब्दे तिरुपतितः जैमिनीयार्षेय-जैमिनीयोपनिषद्ब्राह्मणं डा.वि.आर्. शर्मा महोदयेन संपादितम्।

11. सन् 1976 खिष्टाब्दे जैमिनीयसामगानसंहिता वाराणासीतः विभूतिभूषणभट्टाचार्येण संपाद्य प्रकाशितम्।

12. सन् 2000 खिष्टाब्दे जैमिनीयारण्यकसामगानपुस्तकं चेन्नइतः वेदरक्षणनिधिट्रष्टद्वारा प्रकाशितम्।

**जैमिनीयान्वयानुक्रमस्य भौगोलिकस्थितिः-**

चरणव्यूहे निगदितम्-

"गुर्जरदेशे कौथुमी प्रसिद्धा । कर्णाटके जैमिनी प्रसिद्धा।
महाराष्ट्रदेशे राणायनीयाचेति। एषामध्ययनम्।।"(च.व्यू)

उपर्युद्धृतेन ज्ञायते यत् प्राचीनकाले गुर्जरदेशे कौथुमशाखा , कर्णाटके जैमिनीयशाखा , महाराष्ट्रदेशे राणायनीयशाखा च दृष्टप्रचार आसन्। पं.भगवद्दत्तः स्वकीयं "वैदिकवाङ्मय का इतिहास" नाम्नि ग्रन्थे प्रतिपादयति- जैमिनीयशाखाध्यायिनो ब्राह्मणाः सम्प्रति दक्षिणमद्रासप्रान्तस्य तिन्नेवल्ल्याख्यजनपदे निवसन्तीति। महाभारतस्य निम्नोक्तेन श्लोकेन- "उद्गाता ब्राह्मणवृद्धो विद्वान् कौत्सार्यजैमिनिः" (म.भा.आ. पर्व- 48.6 ) जनमेजयस्य सर्पयज्ञे उद्गातृरुपेण कार्यं निरुढवानिति। अत एव अयं परिक्षितसूतस्य जनमेजयस्य समकालीनः । कुरुक्षेत्रासन्ने कस्मिंश्चित्स्थाने तस्य वसतिः आसीत् इति प्रतीयते। एतद्विषये नन्दलाल डे महोदयस्य मतं पूर्वमेवोद्धृतं वर्तते। महदानन्दस्य विषयोऽयं यत् कालस्य वक्रां गतिं , सोढ्वापि जैमिनीयवंशपरम्परा अध्ययनपरम्परा च इदानीं भारतदेशे, तत्र- कर्णाटके-मेलकोटै (मैसूर),केरळे- कुडुन्दिरपल्ली (पालक्काड), पाञ्चाल(त्रिशूर),

तिरुवनन्तपुरम्, तेन्तवल्ली, तमिळनाडुप्रदेशस्य- श्रीरङ्गम्, अन्बिल्, पापाकुरिचि, उत्तमर्शीलि (तिर्चि), तोगूर,सेन्तलै, (ताञ्जावुर्) इडैयातंकुडि, शेषमूलै, किडामंगलं, तिरुनगरी (नागपट्टणम् )तेन्नार्काड्, श्रीमुष्णम् (तिट्टक्कुडी ) तेन्तिरुपेरै (तुत्तुकुडी ), अळइहपाणाण्यपुरम्, (कुमरिमावट्टम् ) इत्यादिषु स्थलेषु एतच्छाखीयजनाः निवसन्ति। तासु तोगूरग्रामे , त्रिशूर एवं तिरुमलास्थ वेदपाठशालायां मुख्यतया पाठपरम्परा अतति।।

**उपयुज्यग्रन्थानां सूची -**


1. जैमिनीयश्रौतसूत्रवृत्तिः

2. वैदिकवाङ्मय का इतिहास

3. महाभारतः

4.चरणव्यूहसूत्रभाष्यः

5.सामवेदसंहिता

6. राजगोपाल अय्यंगार शताब्दी वैभवपुष्यम्

7.सामधारणलक्षणम्